***

# जगद्गुरुश्रीसुखानन्दाचार्यप्रणीता

## श्रुतिसिद्धान्तदीपिका

नमस्कृत्य परं ब्रह्म सीतया सह राघवम्।
आनन्दभाष्यकृद्रामानन्दाचार्यं समाश्रये।।1।।

पादपद्मं गुरोर्नत्त्वा संसारार्णवतारकम्।
कुर्वे सिद्धान्तबोधाय श्रुतिसिद्धान्तदीपिकाम्।।2।।

विशिष्टाद्वैतनामा हि सिद्धान्तः श्रुतिसम्मतः।
''सदेव सोम्येदमग्रे'' इत्येतच्छ्रुतिमानतः।।3।।

तत्र चिदचिदीशेतिभेदात् तत्त्वं त्रिधा मतम्।
''क्षरं प्रधानमि''त्येतच्छ्रुतेस्तत्र प्रमाणता।।4।।

तत्र ज्ञानस्वरूपोऽणुश्चिदर्थो जीव उच्यते।
परागथाजडं नित्यं विभु ज्ञानं हि तद्गुणः।।5।।

संयोगगतिमत्त्वाच्च द्रव्यत्वमुभयोर्मतम्।
परेण ज्ञानवेद्योऽपि स्वात्मा स्वेनापि गृह्यते।।6।।

विकारिता मता ज्ञाने नात्मनि सा हि सम्मता।
सङ्कोचश्च विकासश्च विकारौ सम्मतौ मतौ।।7।।

''अहं जानामि'' इत्येषा प्रतीतिः सर्वसम्मता।
ज्ञानाश्रयस्ततश्चात्मा ज्ञानं गुणस्तथात्मनः।।8।।

आत्मतज्ज्ञानयोश्चाथ प्रकाशभूतयोस्तथा।
आधाराधेयभावो हि दीपतत्प्रभयोरिव।।9।।

विषयाणां प्रकाशस्य काले ज्ञानं प्रकाशते।
प्रकाशते सदा चात्मा धर्मिभूतः सनातनः।।10।।

अनुकूलस्तथा चैकः स्फुरत्यात्मा सदैव हि।
ज्ञानं चाप्यनुकूलत्वात् सुखरूपं मतं बुधैः।।11।।

''अहं सुखं किलास्वाप्समि'' त्थंभूतप्रतीतितः।
आत्मा सुखस्वरूपोऽत्र स्वस्मै च स्वप्रकाशता।।12।।

ज्ञाने नित्यविभूतौ च परस्मै स्वप्रकाशता।
स्वान्यनिर्वाहकत्वेन दीपवत् तत्र सा मता।।13।।

अणुत्वेऽप्यात्मनस्तस्य ज्ञानं विभु यतस्ततः।
सुखदुःखोपलब्धिर्हि भालादौ सम्मता बुधैः।।14।।

एककाले तथाऽनेककायग्रहश्च योगिनाम्।
श्रुतं ज्ञानस्य नित्यत्वं ''न विज्ञातु'' रितिश्रुतौ।।15।।

उत्क्रान्तिगमनादिभ्यश्चात्माऽणुर्न विभुर्मतः।
''एषोऽणुरात्मा'' इत्येवमणुत्वं चात्मनः श्रुतम्।।16।।

बालस्य स्तन्यपाने हि प्रवृत्तेर्नित्यताऽऽत्मनः।
''अजो नित्यः शाश्वतोऽयम्'' प्रमाणं तत्र विद्यते।।17।।

मध्यमपरिमाणत्वे त्वात्माऽनित्यो भवेत् किल।
सावयवत्वहेतोर्हि लोके घटपटादिवत्।।18।।

कृतस्य विप्रणाश्चाकृतस्यागमनं खलु।
अनित्यत्वे मते जीवे स्यातां दोषौ दुरुद्धरौ।।19।।

आत्मा शरीरतो भिन्नो ''मम देहः'' प्रतीतितः।
जीवे तादृक्प्रतीतेश्च प्राणधीन्द्रियभिन्नता।।20।।
शेषत्वाणुत्वधर्मेभ्यो जीवो ब्रह्मविलक्षणः।
बद्धः स कर्मभिर्बद्धो मुक्तो मुक्तश्च कर्मभिः।।21।
प्रारब्धमुपभुज्याथ देहं त्यक्त्वाऽर्चिरादिना।
साकेतेऽष्टगुणैर्युक्तो मुक्तो रामानुभावकः।।22।।
श्रीरामस्य प्रपत्त्या वा भक्तया मुक्तो भवेन्नरः।
जीवाः परस्परं भिन्नाः सुखिदुःखिव्यवस्थया।।23।।
''नित्यो नित्यानामि''त्येवं श्रुत्यां नाना हि ते श्रुताः।
ब्रह्मणो रूपहीनत्वात् प्रतिबिम्बा न तस्य ते।।24।।
अचेतनमचित्तत्त्वं चतुर्धा सम्प्रकीर्त्तितम।
कालश्च प्रकृतिः शुद्धसत्त्वं ज्ञानं तथैव च।।25।।
कालो जड़ो विभुर्द्रव्यं खण्डाखण्डेतिभेदतः।
द्विविधः स निमेषादिः खण्डोऽनित्यः प्रकीर्त्तितः।।26।।
भूतादिव्यवहाराणां कारणं काल एव हि।
नित्यस्त्वखण्डकालो हि नित्यधाम्नि न स प्रभुः।।27।।
सत्वादित्रिगुणाधारः प्रकृतिः परिकीर्त्तिता।
अचेतना परार्था सा नित्या सततविक्रिया।।28।।
अनात्मनि शरीरे सा चात्मबुद्धिविधायनी।
आत्मनि परतन्त्रे सा स्वातन्त्र्यबुद्धिकारिणी।।29।।
पुरुषार्थत्वबुद्धिं सा त्वैश्वर्यादौ करोति हि।
आत्मन्यनीश्वरे चापि सा करोतीशतामतिम्।।30।।
रामशेषेषु जीवेषु बोधयत्यन्यशेषताम्।
करोत्युपायबुद्धिं च साऽनुपाये तथैव हि।।31।।

सत्वं रजस्तम इति गुणेषु प्रकृतेरथ।
वैषम्याच्च भवन्तीह विकारा महदादयः।।32।।
चतुर्विंशतिरूपा तत् प्रकृतिः परिकीर्त्तिता।
प्रकृतेश्च महाँस्तस्मादहङ्कारस्त्रिधा ततः।।33।।
सात्विकादिन्द्रियाणि स्युरेकादशविधानि हि।
ज्ञानकर्मेन्द्रियत्वाभ्यां द्विधा, तत्रादिमानि तु।।34।।
मनः श्रोत्रं च चक्षुश्च त्वग्घ्राणरसनानि च।
वाक्पाणिपादपायूपस्थाख्यान्यन्त्यानि पञ्च हि।।35।।
तामसाहङ्कृतेश्चाथ शब्दतन्मात्रकोद्भवः।
ततो व्योम ततः स्पर्शस्ततो वायुश्च वायुतः।।36।।
रूपतन्मात्रकं जातं तस्मात् तेजो रसस्ततः।
रसादापस्तथा चाद्भ्यो गन्धो गन्धाद् वसुन्धरा।।37।।
राजसाहङ्कृतिः प्रोक्ता तूभयोः सहकारिणी।
पञ्चीकृत्य च भूतेभ्यो रामो जगत् करोति हि।।38।।
श्रोत्रादिविषयास्तत्राद्रव्यशब्दादयो गुणाः।
परिणामो जगत् सत्यं सद्वारको हि ब्रह्मणः।।39।।
''तमसः परस्तादे''वं श्रुतिभिः परिवर्णितम्।
शुद्धसत्त्वाश्रयो द्रव्यं शुद्धसत्त्वं प्रकीर्त्तितम्।।40।।
नित्यनामथ मुक्तानामीश्वरस्य तथैव च।
कालावश्यं च नित्यं च भोगस्थानादि तन्मतम्।।41।।
प्राप्यते तद्धि भक्त्या च प्रपत्त्या चार्चिरादिना।
रामाधीनं च तद्धाम यद् गत्वा न निवर्त्तते।।42।।
ज्ञानं निरूपितं चाथ राम ईशो निरूप्यते।
यस्य भक्त्या प्रपत्त्या च सायुज्यं प्राप्यते ध्रुवम्।।43।।
श्रीरामोऽस्ति परब्रह्म विभूतिद्वयनायकः।
उपादानं निमित्तं च जगतोऽस्य मतः श्रुतौ।।44।।

विकारः सम्मतो यस्माच्चिदचितोः प्रकारयोः।
प्रकारिणि ततो रामे चाक्षता निर्विकारता।।45।।

सर्वशक्तिरदोषोऽथ रामो दिव्यगुणार्णवः।
आर्त्तादिभिश्चतुर्भिश्चोपास्यो मोक्षप्रदायकः।।46।।

जगज्जन्मादिलीलश्च भगवान् विभुरव्ययः।
सच्चिदानन्दरूपश्च सीतानाथः परेश्वरः।।47।।

आराध्यः फलदश्चाथ जनानां सर्वकर्मणाम्।
दिव्यदेहोऽतिरम्यश्च योगिध्येयश्च सर्ववित्।।48।।

परो व्यूहस्तथाऽन्तःस्थो विभवोऽर्चावतारकः।
पञ्चधैवं स्थितः सर्वशेषी सर्वशरीरकः।।49।।

चिदचिद्भ्यां विशिष्टत्वाद् विशिष्टं ब्रह्म मन्यते।
ब्रह्मणो देह रूपत्वाच्चिदचितोः प्रकारता।।50।।

सूक्ष्माभ्यां चिदचिद्भ्यां हि विशिष्टं ब्रह्म कारणम्।
स्थूलाभ्यां चिदचिद्भ्यां तद् विशिष्टं कार्यमुच्यते।।51।।

एकत्वं हि श्रुतौ यस्मात् कार्यकारण ब्रह्मणोः।
विशिष्टाद्वैतसिद्धान्तस्ततोऽदोषश्च वैदिकः।।52।।

रामानन्दार्यसच्छिष्यसुखानन्दार्यनिर्मिता।
सिद्धान्तबोधिनी भूयाच्छ्रुतिसिद्धान्तदीपिका।।53।।